(भावबोधः)

दशानाम् आनन्दादिगुणरूपैकविषयत्वेन तदधिकरणत्रयमेका पेटिका । तत्राद्ये– गुणस्वरूपस्य गुणित्वसमर्थनम् । द्वितीये– तद्गुणजातस्यालौकिकत्वसमर्थनम् । तृतीये– विचित्रब्रह्मानन्दादिबिम्बभूतस्यापि तस्यावैचित्र्यसमर्थनम् । अष्टादशे– भगवतोऽव्यक्तत्व-समर्थनम् । एकोनविंशतिविंशत्योःसकलजगज्जन्माद्यष्टककर्तृत्वप्रतिपादकत्वेन तदधिकरण-द्वयमेका पेटिका । तत्राद्ये– सार्वकालिकसार्वदेशिकसृष्ट्या- द्यष्टककर्तृत्वसमर्थनम् । द्वितीये– तन्मध्यपतितकर्मफलदातृत्वस्य समर्थनमिति ॥ २० ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थ पूज्यचरणविरचिततत्त्वप्रकाशिकाभावबोधे तृतीयाध्यायस्य द्वितीयः पादः ॥

## भावदीपः

ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ॥ ४२ ॥ शंकानिरासपूर्वं परस्येत्यादिभाष्यं व्याचष्टे ॥ कर्मैवेति ॥ अन्यत्रोक्तं हेतुमाह ॥ कर्मेति ॥ तेनैवालमित्यत आह ॥ श्रुतीति ॥ श्रुतत्वाच्चेत्यत्रोक्तश्रुतिबलाच्चेत्यर्थः । भाष्यस्थापिपदार्थमाह ॥ तत्रापीति ॥ द्वयोः कारणत्वेऽपीत्यर्थः । भाष्ये न कर्मेति विशेषोक्त्याक्षिप्तसामान्यं तावदाह ॥ नोभयोरित्यादि ॥ एतेनोभयोः कारणत्वेऽपीत्यस्य कर्तृकारणरूपकारणत्वेऽपीत्यप्यर्थो ध्येयः । न कर्मेत्यादि व्याचष्टे ॥ न कर्मकर्तृसदिति ॥ पर एवेत्यादिभाष्यं सूत्रविवृतिरिति भावेन तत्सूत्रारूढं कर्तुं सूत्रं योजयति ॥ पूर्वोक्तमिति ॥ फलमत इत्याद्यसूत्रोक्तं ब्रह्मैवेत्यर्थः । एतेन सौत्रस्तुरेवार्थ इति दर्शितम् । प्रागुक्तयुक्तिविरोधं निराह ॥ करणत्वेऽपीति ॥ एतदिति ॥ ब्रह्म कर्तृ कर्म तु करणमित्येतदित्यर्थः । न ह्यचेतनस्येत्यादिना प्रागुक्तोपपत्तिं चात्र संयोजयति ॥ चेतनस्येति ॥ एतच्च प्राक्तनयुक्त्यनुसन्धानं सौत्रपूर्वपदप्रयोगबललब्धमित्याहुः । सूत्रादौ चशब्दाभावेऽपि व्यपदेशाच्चेति चशब्दोक्तिः प्रागुक्तोपपत्तिसमुच्चयाभिप्राया । सोपपत्तिक-जैमिनिमतस्य का गतिरित्यत आह ॥ सामान्यत इति ॥ अभ्युपगतमिति ॥ करणत्वेऽपि तस्योपपत्तेरिति भावः । सूत्रार्थान् हेतूकृत्य फलोक्त्याऽधिकरणार्थमुपसंहरति ॥ अत इति ॥ ईशस्यैव फलदातृत्वं कर्मणः करणत्वमित्यस्य श्रुत्युपपत्तिप्रमितत्वादित्यर्थः ॥ ४२ ॥ अ० २० ॥

॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते तृतीयाध्यायस्य द्वितीयः पादः ॥

## वाक्यार्थमुक्तावली

।। ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ।। सूत्रे धर्ममित्यस्ति । तुशब्दश्चशब्दार्थे । अवधारणे च । हेत्विति भावप्रधानम् । फलमत इति पूर्वोक्तं ब्रह्म धर्मं च फलहेतुं बादरायणो मन्यते । तत्रापि नोभयोः समप्रधानभावः । किन्त्वेकं कर्तृ अन्यत्करणमिति विशेषः । तत्रापि पूर्वोक्तं ब्रह्मैव धर्मं प्रयोजयति न धर्मो ब्रह्म प्रयोजयति । कुतः । पुण्येन पुण्यमिति ब्रह्मकर्मणोः कर्तृत्वकरणत्वरूप- हेतुत्वव्यपदेशादिति सूत्रार्थमभिप्रेत्य व्याचष्टे । किन्तु कर्मान्वयेत्यादिना । ब्रह्मेति वक्तव्ये पूर्वोक्तमित्युक्तिः आद्यसूत्रे उपपत्तेरित्यनेन फलदानोपपत्तेरुक्तत्वात् ईश्वरःकर्ता चेतनत्वाद्देवदत्तवदिति युक्तिसमुच्चयार्थेति भावेनोक्तं चेतनस्येति । एवं पूर्वपदेन युक्तिसूचनं हेतुव्यपदेशादिति हेत्वन्तरपर्यवसितमिति भावेनोक्तं व्यपदेशश्चेति । अत्राद्ये ईश्वरस्य फलदातृत्वे सम्भावनोक्तिः । द्वितीये श्रुत्युपन्यासः । तृतीये श्रुतेरुपचरितत्वशङ्का । चतुर्थे तत्परिहार इति सूत्रक्रमः ।। ४२ ।।

अत्राद्याधिकरणसप्तकमवस्थानां भगवदधीनत्वसमर्थकम् अष्टमनवमयोः अवस्थाप्रेरक-विश्वादीनामभेदप्राकृतरूपराहित्यजीवभेदसमर्थनम् । दशमे भक्तिस्वरूपसमर्थनम् । एकादश-द्वादशयोः भक्तेःसफलत्वफलतारतम्ययोः समर्थनम् । त्रयोदशे विश्वपालकत्वसमर्थनम् । चतुर्दशे तस्योपलब्ध्ययोग्यत्वसमर्थनम् । पञ्चदशषोडशसप्तदशेषु आनन्दादिगुणवत्वं गुणा-नामलौकिकत्वं विचित्रब्रह्मानन्दबिम्बभूतानामप्यविचित्रत्वमित्येतेषां समर्थनम् । अष्टादशेऽ-व्यक्तत्वसमर्थनम् । एकोनविंशतिविंशत्योः सृष्ट्याद्यष्टकर्तृत्वसमर्थनमिति पेटिका द्रष्टव्या ।

इति श्रीतत्वप्रकाशिकावाक्यार्थमुक्तावल्यां तृतीयाध्यायस्य द्वितीयःपादः ।।

## तत्त्वसुबोधिनी

तर्हि किं साहाय्येन कारणत्वं नेत्याह । तत्रापीति । उभयोःकारणत्वेऽपीत्यर्थः । न कर्मेति । कर्तृत्वस्य बुद्धिघटिततत्वेन जडस्य तदसम्भवादिति भावः । तर्ह्यन्वयव्यतिरेकविरोध इत्यत आह । करणत्वेऽपीति । कर्तृत्वव्यपदेशात् करणत्वव्यपदेशादित्यनेन सूत्रभाष्ययोः हेतुशब्दः भावप्रधानः । स च द्वेधा व्याख्येय इत्युक्तं भवति । तर्हि बादरायणजैमिनिमतयोः विरोध इत्यत आह । सामान्यत इति । कारणत्वमात्रं तु कर्मणः फलं प्रति कारणत्वेऽप्युपपन्नमिति भावः । अत्राद्ये सूत्रे ईश्वरस्य फलदातृत्वे उपपत्तिरूपप्रमाणोक्तिः ।

द्वितीये तदुपोद्बलकप्रबलश्रुतिरूपप्रमाणोक्तिः । तृतीये तदुभयाक्षेपः । चतुर्थे तत्साधनमिति सूत्रक्रमः ।

इति श्रीतत्वप्रकाशिकाटीकायां तत्वसुबोधिन्यां तृतीयाध्यायस्य द्वितीयःपादः ।

## वाक्यार्थविवरणम्

श्रुतिबलात् ॥ रातिर्दातुरिति श्रुतिबलात् ॥ तदिति ॥ फलेत्यर्थः । करणकर्तृ-प्रयोज्यमिति वक्तव्यमित्यर्थः ॥ कर्तृ सत् ॥ कर्तृभूतं सत् । पूर्वपदं व्याख्याति ॥ फलदाने पूर्वोक्तमिति ॥ 'फलमत उपपत्तेरि'ति पूर्वसूत्रे फलदातृत्वेनोक्तमित्यर्थः ॥ तत्कर्तृ ॥ फलदाने कर्तृ । ननु कर्मणः फलदातृत्वानङ्गीकारे फलस्य कर्मान्वयव्यतिरेकविरोध इत्यतस्तयोरन्यथासिद्धिमाह ॥ करणत्वेऽपीति ॥ हेतुव्यपदेशादित्यत्र हेतुत्वेति भावप्रधानत्वमित्यभिप्रेत्य द्वेधा व्याचष्टे । ब्रह्मणः कर्तृत्वेत्यादिना ॥ करणत्वेनेति ॥ पुण्येनेति तृतीययेति शेषः । तर्हि जैमिनिमतविरोध इत्यत आह ॥ सामान्य इति ॥ तच्चाभ्युपगतमिति ॥ तदुक्तं कर्मणः फलकारणत्वमङ्गीकृतं करणत्वाङ्गीकारात् । करणत्व-स्यापि कारणविशेषत्वादिति भावः ॥ प्रेरितमिति ॥ कर्तृप्रयोज्यत्वरूपकरणत्वाङ्गीकारा-दिति भावः ॥

॥ इति तत्त्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासवर्यकृते
तृतीयाध्यायस्य द्वितीयः पादः ॥

## वाक्यार्थमञ्जरी

ॐ पूर्वन्तु बादरायणो हेतुव्यपदेशात् ॐ ॥ पूर्वं पूर्वोक्तं ब्रह्म तु कर्तृत्वरूपविशेषेण कारणम् कुतः ? हेतुव्यपदेशात् । पुण्येनेति ब्रह्मणः कर्तृत्वेन कारणत्वव्यपदेशादिति बादरायणो मन्यत इत्यर्थः । समप्रधानभावः प्रधानत्वसाम्यम् । तर्ह्यन्वयव्यतिरेकानु-विधायित्वन्यायविरोध इत्यत आह ॥ करणत्वेऽपीति ॥ सामान्यत इति ॥ कर्तृकरणत्वविशेषं विहायेत्यर्थः । कारणत्वमात्रं तु कर्मणः फलं प्रति करणत्वेऽप्युपपन्नमिति भावः । तत्सत्ता कर्मसत्ता ॥ २० ॥

इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्करा
श्रीनिवासविरचितायान्तृतीयाध्यायस्य द्वितीयःपादः ॥

श्रीविजयीन्द्रतीर्थविरचितः

# ब्रह्मसूत्रन्यायसंग्रहः

## तृतीयाध्यायस्य प्रथमद्वितीयपादौ

जिज्ञासासूत्रगब्रह्मशब्दार्थः प्राङ् निरूपितः ।
अथेत्याद्यवशिष्टार्थ उत्तरद्विकगोचरः ॥ १ ॥

एवं च सिद्धसाध्यार्थं द्विकद्वयमिति स्थितिः ।
तृतीये साधनं साध्यं चतुर्थे तत्क्रमात्क्रमः ॥ २ ॥

वैराग्यभक्त्युपासातद्दृष्टिमाहात्म्यमंघ्रिषु ।
वैराग्याद्भक्तिदार्ढ्ये सत्युपासातोऽपरोक्षधीः ॥ ३ ॥

पूर्वपूर्वस्य हेतुत्वमुत्तरत्रेति तत्क्रमः ।
भूतयुग्यातिदेहार्थं प्रश्नादेर्मूर्तिमान्पुमान् ॥ ४ ॥

त्र्यात्मभूयस्त्वतोप्शब्दस्तथात्वं (भूतेतः) प्राणयुग्गतेः ।
अंशतोऽग्न्यादिगत्युक्तिः श्रद्धाऽऽपोग्रावथादिमे ॥ ५ ॥

अर्थादुक्तेश्च तत्सिद्धिः कर्म्यमुख्यामृतो मतः ।
श्रुतेनाशेषभुक्स्वर्गेऽन्यथाचागतिरागमात् ॥ ६ ॥

गतागती कर्मणैव चानिष्टादिकृतामपि ।
सप्तेति नित्यनिरयोऽत्रापीश व्यापृतिः श्रुतेः ॥ ७ ॥

नैतयोरिति साध्योक्तिर्नहितोः ससुखं तमः ।
नाविद्वत्त्वाध्धूमतादि न चिराद्गर्भभाक्च्छ्रुतेः ॥ ८ ॥

व्रीह्यादिस्थितिरत्रोक्तेः पितरं प्रविशत्पुरा ।
योनिं प्रविश्यैव देही वैराग्यांघ्रौ तु विंशतिः ॥ ९ ॥

ॐ ईशसृष्टः श्रुतेः स्वप्नः तत एव तिरोहितः ।
न कालाज्जाग्रदप्यस्मात्सुप्तिर्नाडीस्थितात्मनि ॥ १० ॥

प्रबोधोऽप्यत एवास्मात्सर्वावस्थास्सदा हरेः ।
मोह ईशेऽर्धप्रवेशो नेशरूपेषु भिन्नता ॥ ११ ॥

ईशोऽप्राकृतरूपोन्योऽजीवो यत्प्रतिबिम्बकः ।
नाभक्तौ साम्यसुव्यक्तिस्तद्वैचित्र्यं तथा फलात् ॥ १२ ॥

पातान्नदानादिनेशोऽव्यक्तोप्याविर्भवेत्स्वतः ।
कालवत्स्वानन्यधर्मालौकिका (स्तेन्यतादितः) स्तत्सुखादयः ॥ १३ ॥

स्थानभेदेप्यभिन्नांशो ध्येयादन्यो निषेधतः ।
सदा सर्वं चेशसृष्टं फलं चास्माद्धि युज्यते ॥ १४ ॥

श्रीधीरेन्द्रतीर्थविरचितः

# विषयवाक्यसङ्ग्रहः

## अथ तृतीयाध्यायः - प्रथमः पादः

ब्राह्मणो निर्वेदमिति तदन्तरनयस्य हि ।
त्र्यात्मकत्वादिति नये वेत्थैवेति च वाग्द्वयम् ॥ १ ॥

यद्वा तदन्तरनये वैराग्यादि प्रसाधनं प्रबोधकम् ।
त्र्यात्मकत्वाप्राणगतेरिति वेत्थेति वाग्द्वयम् ॥ २ ॥

अग्निं वागप्येति वातमित्यग्न्यादिगतिश्रुतेः ।
प्रथमे श्रवणं वेत्थेत्यश्रुतत्वादिके च तत् ॥ ३ ॥

भाक्तं वेत्यत्र वैराग्यपूर्वसाधनबाधकम् ।
कृतात्ययनये भूतैर्गच्छतीत्यादि वाङ्मतम् ॥ ४ ॥

यथा तमेव पुनर्गच्छत्यागच्छतीति च ।
चरणादित्यत्र तथानिष्टादि कारिणामपि ॥ ५ ॥

संयमनेत्यपि सप्तत्या तत्रापीत्यनमोर्मतम् ।
अथैतयोः पथोर्नैकेति विद्याकर्मणोर्नये ॥ ६ ॥

न तृतीये तथेत्यत्र यातयाम इतीत्यपि ।
भूत्वेत्यादिकं तत्स्वाभाव्यापत्तिके नये ॥ ७ ॥

नाति चिरेणेति तत्र ततः शेषेण चेति वाक् ।
अन्याधिष्ठित इत्यस्मिन्निति व्रीहियवा इति ॥ ८ ॥

तद्य इह शुभकृतः रेतः सिग्योगिके त्विति ।
योनेः शरीरमित्यत्र सृतियोग्य इतीरितम् ॥ ९ ॥

इति श्रीधीरेन्द्रयतिकृते विषयवाक्यसङ्ग्रहे तृतीयाध्यायस्य प्रथमः पादः ।

# द्वितीयः पादः

स्वप्नायै वेत्यादि संध्ये सृष्टिराहनये मतम् ।
वेदनंतरमित्याद्यं पराभिध्यानके नये ।। १ ।।

जागरितस्थान इति देहयोगादितीरिते ।
गाडीषु सुप्त इत्याद्या तदभाव इतीरिते ।। २ ।।

अतः प्रबोध इत्यस्मिन् यदा जीवः प्रबुध्यते ।
स एव वेत्यधिकृतौ स स्वप्न इति वा मतम् ।। ३ ।।

मुग्धेऽर्धसम्पत्तिनये मोहादिप्रतिपादके ।
दक्षिणानि मुखेत्यादि मतं न स्थानतो नये ।। ४ ।।

अरूपयन्नरा रुग्मवर्णं चानंतमात्रकम् ।
अत एव चोपमेत्यादावंबुवदग्रहणे नये ।। ५ ।।

वृद्धिह्रासादिका चैव यस्य देवेति भक्तिवाक् ।
य उत्रिधात्विति वचः प्रकृतैतावतानये ।। ६ ।।

भक्तिरेवैनमभियाति तदव्यक्तनये तथा ।
उभयव्यपदेशाख्ये यस्य देवेति वा वचः ।। ७ ।।

परमतस्सेत्वित्यत्र सत्यज्ञानादिवाचकम् ।
एतस्य ब्रह्मण इति स्थानवैशेष्यके नये ।। ८ ।।

तथाऽन्यत्प्रतिषेधाख्ये ब्रह्मोपास्स्वेति वाङ्मतम् ।
स इदं सर्वमसृजतेत्यनेनेति सन्नये ।। ९ ।।

एषह्येवेत्यादिफलमत इत्यादिके नये ।
इति श्रीधीरेन्द्रयतिकृते विषयवाक्यसङ्ग्रहे तृतीयाध्यायस्य द्वितीयः पादः

# तृतीयाध्यायस्य प्रथम-द्वितीयपादयोः
# भाष्योदाहृतप्रमाणवचनानि

| सूत्रसंख्या | प्रथमः पादः | |
|---|---|---|
| १. | भूतबन्धस्तु संसारः | वराहपुराणम् |
| | भूतानां विनिवृत्तिस्तु | महाभारतम् |
| | वेत्थ यथा पञ्चम्याम् | (छां.उ.५-३-९) |
| २. | तापापनोदो भूयस्त्वम् | भागवतम् |
| ३. | अत्र वाव भूनानि | भाल्लवेयश्रुतिः |
| ४. | यत्रास्य पुरुषस्य | |
| | पुरुषस्य मृतौ | ब्राह्मे |
| | मृतिकाले जहात्येनम् | ब्रह्माण्डे |
| ५. | तस्मिन्नेतस्मिन्नग्नौ | (छां-उ-५-४-२) |
| | इति तु पञ्चम्याम् | (छां-उ-५-९-१) |
| ६. | अथैनं यजमानम् | कौण्ठख्य श्रुतिः |
| ७. | नान्यः पन्थाः अयनाय | (तै.आ.३-१३) |
| | स एनमविदितो | (बृ.उ. ३-४-१५) |
| ८. | ततः शेषेणेमम् | श्रुतिः |
| | भुक्तशेषानुशयवानिमाम् | स्मृतिः |
| ९. | धूमादभ्रमभ्रादाकाशम् | कापायणश्रुतिः |
| १०. | ''तद्य इह रमणीयचरणा | (छां-उ-५-१०-७) |
| | आचार इति सम्प्रोक्तः | स्मृतिः |
| १२. | तुशब्दस्तु विशेषे स्यात् | नाममहोदधौ |
| १३. | तद्य इह शुभकृतो | भाल्लवेयश्रुतिः |
| १४. | सर्वे वा रातेऽशुभकृतः | कौण्ठख्यश्रुतिः |
| १६. | रौरवोऽथ महांश्चैव | महाभारतम् |
| १७. | सर्वं विसृजति | कौषारवश्रुतिः |
| | सं स्वर्गे स भूमौ | पौत्रायणश्रुतिः |
| | नरकेऽपि वसन्नीशः | भागवततन्त्रम् |
| १८. | अथैतयोः पथोर्न | (छां-उ-५-१०-८) |

| | | |
|---|---|---|
| | विद्यापथः कर्मपथः | महाभारतम् |
| २०. | तिर्यक्षु नरके चैव | भविष्यत्पर्वणि |
| | अतिप्रिये यथा राजा | ब्राह्मे |
| २१. | नारायणप्रसादेन समिद्धज्ञानचक्षुषा | पाद्मपुराणम् |
| २३. | महातमस्त्रिधा प्रोक्तम् | कौर्मे |
| २४. | धूमादिभावप्राप्तिश्च | गारुडे |
| २५. | स्वर्गाल्लोकादवाक् प्राप्तः | नारदीये |
| २६. | त इह व्रीहियवा | (छां-उ.५-१०-६) |
| | सोऽवाग्गतः स्थावरान् | कौषारवश्रुतिः |
| | स्वर्गादवाग्गतौ देही | वाराहे |
| २७. | हिंसा त्ववैदिका या तु | वाराहे |
| २८. | ततो रेतस्सिचमेवानुप्रविशति | कौण्ठरव्यश्रुतिः |
| २९. | दिवः स्थास्नूनगच्छति | पौष्यायणश्रुतिः |
| | स्थावरणि दिवः प्राप्तः | ब्राह्मे |

# अथ द्वितीयः पादः

| | | |
|---|---|---|
| १. | न तत्र रथा न रथयोगाः | (बृ.उ-६-३-१०) |
| २. | य एषु सुप्तेषु जागर्तिः | (कठ-उ, ५-८) |
| | रातस्माद्येव पुत्रो जायत | गौपायनश्रुतिः |
| ३. | मनोगतांस्तु संस्कारान् | ब्रह्माण्डे |
| ४. | यदा कर्मसु काम्येषु | (छां.उ, ५-२-९) |
| ५. | स्वप्नादिबुद्धिकर्ता च | कौर्मे |
| ६. | स एव जागरिते स्थापयति | कौण्ठरव्यश्रुतिः |
| ७. | आसु तदा नाडीषु | (छां.उ. ८-६-३) |
| | सता सौम्य तदा | (छां.उ.६-८-१) |
| ८. | एष एव सुप्तम् | कौण्डिन्यश्रुतिः |
| ९. | एष ह्येव साधु | (कौ.उ.३-८) |
| | प्रदर्शकस्तु सर्वेषाम् | स्मृतिः |
| | एष स्वप्नान्दर्शयत्येव | श्रुतिः |
| | आत्मानमेव लोकमुपासीत | (बृ.उ.३-४-१५ |

| | | |
|---|---|---|
| १०. | हृदयस्थात्पराज्जीवो दूरस्थः | वाराहे |
| ११. | सर्वेषु भूतेष्वेतमेव | (ऐ.आ.३-२-३) |
| | एकरूपः परो विष्णुः | मात्स्ये |
| | प्रतिदृशमिव नैकधाऽर्कमेकम् | भागवते |
| १२. | कार्यकारणबद्धौ ताविष्येते | (मां.उ.२-१६) |
| | एष त आत्माऽन्तर्याम्यमृतः | (बृ.उ.५-७-३) |
| | अयमेव स योऽयमात्मेदम् | (बृ.उ. ४-५-१) |
| १३. | अमात्रोऽनन्तमात्रश्च | (मां.उ.४-७) |
| | बद्धो बन्धादिसाक्षित्वात् | ब्रह्मतर्के |
| १४. | भौतिकानि हि रूपाणि | मात्स्ये |
| १६. | ऐकात्म्यप्रत्ययसारम् | (मां.उ.२-७) |
| | आनन्दमात्रमजरं पुराणम् | चतुर्वेदशिखायाम् |
| १७. | तद्विज्ञानेन परिपश्यन्ति | (मां.उ.२-२-८) |
| | शुद्धस्फटिकसङ्काशं वासुदेवम् | मात्स्ये |
| १८. | रूपं रूपम् | (बृ-उ, ४-५-१९) |
| | बह्वः सूर्यका यद्वत् | स्मृतिः |
| १९. | यमेवैष वृणुते तेन लभ्यः | (का.उ. २-२३) |
| | महित्वबुद्धिर्भक्तिस्तु | पाद्मे |
| २०. | साधनस्योत्तमत्वेन साध्यम् | ब्राह्मे |
| २१. | अथात आनन्दस्य | (तै.उ.२-८) |
| | यथा भक्तिविशेषोऽत्र | स्मृतिः |
| २२. | नैतावदेना परे अन्यदस्त्युक्षा | (ऋ.सं.१०-३१-८) |
| | सृष्टिं च पालनं चैव | ब्रह्माण्डे |
| २३. | अरूपमक्षरं ब्रह्म सदाऽव्यक्तम् | कौण्ठरव्यश्रुतिः |
| २४. | न तमाराधयित्वाऽपि | ब्रह्मवैवर्ते |
| २५. | नासौ सूक्ष्मो न स्थूलः परः | माण्डव्यश्रुतिः |
| | स्थूलसूक्ष्मविशेषोऽत्र | गारुडे |
| | अव्यक्तव्यक्तभावौ च | कौर्मे |
| २६. | आत्मा वा अरे द्रष्टव्यः | (बृ.उ.४-४-५) |
| २७. | तस्याभिध्यानात् | (श्वे.उ. १-१०) |
| | नित्याव्यक्तोऽपि भगवानीक्ष्यते | नारायणाध्यात्मे |
| ३०. | प्रकाशवत्कालवद्वा यथाऽङ्गे | नारायणाध्यात्मे |

| | | |
|---|---|---|
| | आनन्देन त्वभिन्नेन व्यवहारः | पाद्मे |
| ३१. | नेह नानाऽस्ति | (कठ.उ. २-४-११) |
| ३२. | एष नित्यो महिमा | (बृ.उ.६-४-२३) |
| | यतो वाचो | (तै.उ.२-४) |
| | एतस्यैवाऽऽनन्दस्यान्यानि | (बृ.उ. ६-३-३२) |
| ३३. | अदृष्टमव्यवहार्यम् | कौण्डिन्यश्रुतिः |
| ३४. | पादोऽस्य विश्वा | (ऋ.सं. १०-१०-३) |
| | अलौकिकोऽपि ज्ञानादिः | पाद्मे |
| ३५. | ब्रह्मादिगुणवैशेष्यात् | वाराहे |
| ३६. | ऐश्वर्यात्परमाद्विष्णोः | पाद्मे |
| ३७. | यन्मनसा न मनुते | (के.उ.-१-६) |
| | पश्यान्ति परमं ब्रह्म | ब्रह्मतर्के |
| ३८. | एष सर्व एष सर्वगत | भाल्लवेयश्रुतिः |
| | सर्वत्र सर्वमेतस्मात्सर्वदा | चतुर्वेदशिखायाम् |
| ४०. | विज्ञानमानन्दं ब्रह्म रातिर्दातुः | (बृ.उ.५-९-२७) |
| ४१. | एष ह्येव साधु कर्म | कौ.उ.३-८) |
| ४२. | पुण्येन पुण्यं लोकं नयति | (प्र.उ. ३-२) |

*तृतीयाध्यायस्य द्वितीयः पादः समाप्तः*

# द्वैतवेदांताध्ययन संशोधन प्रतिष्ठानम्

# ದ್ವೈತ ವೇದಾಂತ ಅಧ್ಯಯನ ಮತ್ತು ಸಂಶೋಧನಾ ಪ್ರತಿಷ್ಠಾನ

# DVAITA VEDANTA STUDIES & RESEARCH FOUNDATION

## Executive Committee

N. Narasimha Rau
Formerly Chief Secy. to Govt. of Karnataka
Chairman

Prof. K.T. Pandurangi
Formerly Prof. of Sanskrit
Bangalore University
Vice-Chairman & Hon. Director

Prof. D. Pralhadachar
Poornaprajna Vidyapeetha
Chairman
Academic Committee

A.B. Shyamachar
Hon. Secretary

N.T. Mannur
Treasurer

## Members

Shri D.S. Raghavendrachar, I.A.S
Formerly Secretary to
Governor of Karnataka

Shri Raghavendrarao Manvikar, I.A.
Formerly Commissioner o
Religious Endowmen

Vidvan Shri Guruvenkatacharya
Poornaprajna Vidyapeetha, Bangalore

Vidvan Shri Satyadhyanacharya Katt
Jayatheertha Vidyapeetha, Bangalor

S.R. Pandurangi

Bindu Madhava Keru

M.P. Pranesh
Office Manager